॥ शीक्षावल्ली तैत्तिरीयोपनिषदि ॥

शासन

तैत्तिरीय उपनिषद् ।

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति

सत्यं वद ।

धर्मं चर ।

स्वाध्यायान्मा प्रमदः ।

आचार्याय प्रियं धनमाहृत्य

प्रजातन्तुं मा व्यवच्छेत्सीः ।

सत्यान्न प्रमदितव्यम् ।

धर्मान्न प्रमदितव्यम् ।

कुशलान्न प्रमदितव्यम् ।

भूत्यै न प्रमदितव्यम् ।

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ १॥

देवपितृकार्याभ्यां न प्रमदितव्यम् ।

मातृदेवो भव ।

पितृदेवो भव ।

आचार्यदेवो भव ।

अतिथिदेवो भव ।

यान्यनवद्यानि कर्माणि तानि सेवितव्यानि ।

नो इतराणि ।

यान्यस्माक सुचरितानि ।

तानि त्वयोपास्यानि । नो इतराणि ॥ २॥

ये के चारुमच्छ्रेया सो ब्राह्मणाः ।

तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

श्रद्धया देयम् ।

अश्रद्धयाऽदेयम् ।

श्रिया देयम् ।

ह्रिया देयम् ।

भिया देयम् ।

संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा

वृत्तविचिकित्सा वा स्यात् ॥ ३॥

ये तत्र ब्राह्मणाः संमर्शिनः ।

युक्ता आयुक्ताः ।

अलूक्षा धर्मकामाः स्युः ।

यथा ते तत्र वर्तेरन् ।

तथा तत्र वर्तेथाः ।

अथाभ्याख्यातेषु ।

ये तत्र ब्राह्मणाः संमर्शिनः ।

युक्ता आयुक्ताः ।

अलूक्षा धर्मकामाः स्युः ।

यथा ते तेषु वर्तेरन् ।

तथा तेषु वर्तेथाः ।

एष आदेशः ।

एष उपदेशः ।

एषा वेदोपनिषत् ।

एतदनुशासनम् ।

एवमुपासितव्यम् ।

एवमु चैतदुपास्यम् ॥ ४॥

॥ इति तैत्तिरीयोपनिषदि शीक्षावल्लीनामप्रथमोध्याये एकादशोऽनुवाकः ॥